स्रवणे तथा । चतुरष्ट द्विषट् द्व्यष्ट गण्डूषैः शुद्धिमाप्नुयात् ॥ अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमपः स्पृशेत् । आश्वलायनः—कुर्याद्द्वादश गण्डूषान् पुरीषोत्सर्जने ततः । मूत्रोत्सर्गे च चतुरो भोजनान्ते तु षोडश ॥ भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत् ॥ प्रयोगपारिजाते—पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा । ऋषयः पृष्ठतः सर्वे वामे गण्डूषमाचरेत् ॥

५७. 'कच्छविचारः.' सङ्ग्रहे—वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् । त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत् ॥ ग्रन्थान्तरे—आदौ कच्छस्ततो नीवी नाभिमध्ये च वाससी । नीवी दक्षिणतः स्थाप्या एतत् त्रिकच्छलक्षणम् ॥ कच्छेन सहितो विप्रो मूत्रोत्सर्गं करोति चेत् । अज्ञानाज्ज्ञानतो वापि पादकृच्छ्रेण शुद्ध्यति ॥ गुह्यं प्रक्षाल्य सलिलैर्मूत्रोत्सर्गादनन्तरम् । गण्डूषत्रितयं कृत्वा तेन शुद्धो भवेद्द्विजः ॥ मुक्तकच्छस्तु यो विप्रो धरण्यां पादतश्चरेत् । पदे पदे सुरापानं प्रायश्चित्तं न विद्यते ॥

५८. 'मौनधारणम्.' हारीतः—उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥ अङ्गिराः—सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने । पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः । गुरूणां सन्निधौ दाने योगे चैव विशेषतः । एतेषु मौनमातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥

५९. 'मुखमार्जनविधिः.' पारस्करगृह्यसूत्रे—दन्तधावनमन्त्रः- औदुम्बरेण दन्तान्धावेत । अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति ॥ २।६। १७ ॥ हरिहरभाष्ये—औदुम्बरेण द्वादशाङ्गुलसंमितेन कनिष्ठिकाग्रवत् स्थूलेनोदुम्बरकाष्ठेन अन्नाद्याय व्यूहध्वमितिमंत्रेण दन्तान्धावयेत् ॥

६०. 'दन्तधावनावश्यकता.' अत्रिः—मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः । दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ॥

६१. 'दन्तधावने वनस्पतिप्रार्थना.' विश्वामित्रकल्पे—आयुर्बलं यशो वर्चः प्रजाः पशून् वसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

६२. 'दन्तधावने उक्तकाष्ठानि.' नागदेवः—करञ्जोदुम्बरौ चूतः कदम्बो लोध्रचम्पकौ । बदरीति द्रुमाश्चैते प्रोक्ता दन्तप्रधावने ॥ वाचस्पतिः—अथो मुखविशुद्ध्यर्थं गृह्णीयाद्दन्तधावनम् । आचान्तोऽप्यशुचिर्यस्मादकृत्वा दन्तधावनम् ॥ आम्राम्रातकधात्रीजमङ्कोटखदिरोद्भवम् । शम्यपा-

मार्गखर्जूरीशेलुश्रीपर्णिपीलुजम् ॥ राजादनं च नारङ्गं कषायं कटुकण्टकम् । क्षीरवृक्षोद्भवं वापि प्रशस्तं दन्तधावने ॥ जिह्वोल्लेखनिकां वापि कुर्याच्चापाकृतिं शुभाम् । ततः कुर्यात्प्रयत्नेन शुद्ध्यर्थं दन्तधावनम् ॥ **'उक्तदन्तधावनकाष्ठे गुणाः.'** **नृसिंहपुराणे**—तिन्तिणिर्वेणुपृष्ठं च आम्रनिम्बौ तथैव च । सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे ॥ प्लक्षजे चार्थसम्पत्तिर्बदर्यां मधुरः स्वरः । खादिरे चैव सौभाग्यं बिल्वे तु विपुलं धनम् ॥ उदुम्बरे च वाक्सिद्धिर्बन्धूके च दृढा मतिः । रौध्रे च कीर्तिः सौभाग्यं पालाशे सिद्धिरुत्तमा ॥ कदम्बे सकला लक्ष्मीराम्र आरोग्यमेव च । अपामार्गे स्मृतिर्मेधा प्रज्ञा वाणी वपुर्धृतिः ॥ आयुः शीलं यशो लक्ष्मीः सौभाग्यं चोपजायते । अर्केण हन्ति रोगांस्तु बीजपूरेण तु व्यथाम् ॥ दाडिमे सिन्दुवारे च उटजे कुटजे तथा । जाती च करमर्दी च दुःस्वप्नं नाशयेदिति ॥ ककुभेन तथायुष्मान्भवेत्पलितवर्जितः । तस्माच्छुष्कं तथार्द्रं वा भक्षयेद्दन्तधावनम् ॥

६३. **'दन्तधावनविधिः.'** **धन्वन्तरिः**—तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम् । कनिष्ठिकापरीणाहमृज्वग्रन्थिकमव्रणम् ॥ अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम् । अवेक्ष्यर्तुं च दोषं च रसं वीर्यं च योजयेत् ॥ कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः । निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥ मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा । क्षौद्रव्योषत्रिवर्गोक्तं सतैलं सैन्धवेन च ॥ चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् । एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च ॥ दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् । जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥ तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् । मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं परम् ॥ दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम् । क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः ॥ भिल्लोदककषायेण तथैवामलकस्य वा । प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा ॥

६४. **'दन्तधावनकाष्ठाभावे.'** **आचारार्के**—तिन्तिण्यादिविहितवृक्षोद्भवेन चूर्णीकृताग्रेण प्रक्षालितेन शुष्केणार्द्रेण वा दन्तधावनं कुर्यात् ॥ **नागदेवः**—अभावे दन्तकाष्ठस्य प्रतिषिद्धदिने तथा । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥ यद्वा तृणपर्णोदकैरङ्गुल्या वा दन्तान्धावयेत् ॥

६५. **'वर्ज्यदन्तधावनकाष्ठानि.'** **गर्गः**—कुशं काशं पलाशं च निशुपं यस्तु भक्षयेत् । तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥ अर्धशुष्कं त्वचाहीनं यत्नेन परिवर्जयेत् । पतितं चातिरिक्तं च कीटविद्धं

तथैव च ॥ नागदेवः—नाङ्गुलीभिश्च मृद्भिश्च पर्णैर्लोष्ठैश्च भस्मना । नायसैश्च तथा लोहैः सदा दन्तान् मृजेद्द्विजः ॥

६६. 'दन्तधावनकाष्ठप्रमाणम्.' नागदेवः—दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवाङ्गुलम् । अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्तसंमितम् ॥ गर्गः—चतुरङ्गुलमात्रं तु नारीणां नात्र संशयः ॥ विष्णुस्मृतिः—कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् । प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥

६७. 'दन्तधावनकाष्ठवर्जनकालः.' व्यासः—प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥ आचार्यः—अष्टम्योश्च चतुर्दश्योः पञ्चदश्यां त्रिजन्मसु । व्यतीपाते च संक्रान्त्यां दंतकाष्ठं न भक्षयेत् ॥

६८. 'दन्तधावने दिग्विशेषः.' विष्णुः—प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च । दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥ उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च । पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ।

६९. 'दन्तघर्षणान्ते गण्डूषविधिः.' शौनकः—पश्चाद्द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् । स्मृत्वोङ्कारं च गायत्रीं बध्नीयाद्वै शिखां ततः ॥

७०. 'मुखप्रक्षालनानन्तरं देहशुद्धिः.' व्यासः—अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ अनेन प्रकारेणाद्भिः शरीरं मार्जयेत् ॥

७१. 'मुखप्रक्षालनानन्तरं सूर्यप्रार्थना.'—आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥

७२. 'मुखप्रक्षालनानन्तरं तुलसीप्रार्थना.'—महाप्रसादजननी सर्वसौभाग्यवर्धिनी । आधिव्याधिहरा नित्यं तुलसि त्वं नमोऽस्तु ते ॥

७३. 'मुखप्रक्षालनानन्तरं गोप्रार्थना.'—गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

७४. 'प्रातःस्मरणे नारायणस्तुतिः.' आचारमयूखे व्यासः—प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै नारायणं गरुडवाहनमब्जनाभम् । ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगुलं परमस्य पुंसः । नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ प्रातर्भजामि भजतामभयङ्करं तं प्राक्सर्वजन्मकृतपापभयापहत्यै । यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरशो-

कम्रणाशनकरो धृतशङ्खचक्रः ॥ श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः। लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥

७५. 'गणेशस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि गणनाथमनाथबन्धुं सिंदूरपूर्णपरिशोभितगण्डयुग्मम् । उद्दण्डविघ्नपरिखण्डनचण्डदण्डमाखण्डलादिसुरनायकवृन्दवन्द्यम् ॥ प्रातर्नमामि चतुराननवन्द्यमानमिच्छानुकूलमखिलं च वरं ददानम् । तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं पुत्रं विलासचतुरं शिवयोः शिवाय ॥ प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुञ्जरास्यम् । अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहं सुतमीश्वरस्य ॥ श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् । प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥

७६. 'सूर्यस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं रूपं हि मण्डलमृचोऽथ तनुर्यजूंषि । सामानि यस्य किरणाः प्रभवादिहेतुं ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥ प्रातर्नमामि तरणिं तनुवाङ्मनोभिर्ब्रह्मेन्द्रपूर्वकसुरैर्नुतमर्चितं च । वृष्टिप्रमोचनविनिग्रहहेतुभूतं त्रैलोक्यपालनपरं त्रिगुणात्मकं च । प्रातर्भजामि सवितारमनन्तशक्तिं पापौघशत्रुभयरोगहरं परं च । तं सर्वलोककलनात्मककालमूर्तिं गोकण्ठबन्धनविमोचनमादिदेवम् ॥ श्लोकत्रयमिदं भानोः प्रातः प्रातः पठेत्तु यः । स सर्वव्याधिनिर्मुक्तः परं सुखमवाप्नुयात् ॥

७७. 'देवीस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां सद्रत्नवन्मकरकुण्डलहारभूषाम् । दिव्यायुधोर्जितसुनीलसहस्रहस्तां रक्तोत्पलाभचरणां भवतीं परेशाम् ॥ प्रातर्नमामि महिषासुरचण्डमुण्डशुम्भासुरप्रमुखदैत्यविनाशदक्षाम् । ब्रह्मेन्द्ररुद्रमुनिमोहनशीललीलां चण्डीं समस्तसुरमूर्तिमनेकरूपाम् ॥ प्रातर्भजामि भजतामभिलाषदात्रीं धात्रीं समस्तजगतां दुरितापहन्त्रीम् । संसारबन्धनविमोचनहेतुभूतां मायां परां समधिगम्य परस्य विष्णोः ॥ श्लोकत्रयमिदं देव्याश्चण्डिकायाः पठेन्नरः । सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥

७८. 'शिवस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि भवभीतिहरं सुरेशं गङ्गाधरं वृषभवाहनमम्बिकेशम् । खट्वाङ्गशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयम् ॥ प्रातर्नमामि गिरिशं गिरिजार्धदेहं सर्गस्थितिप्रलयकारणमादिदेवम् । विश्वेश्वरं विजितविश्वमनोभिरामं संसाररोगहरमौषधमद्वितीयम् ॥ प्रातर्भजामि शिवमेकमनन्तमाद्यं वेदान्तवेद्यमनघं पुरुषं महान्तम् । नामादिभेदरहितं षड्भावशून्यं संसाररोगहरमौषधमद्वि-

तीयम् । प्रातः समुत्थाय शिवं विचिन्त्य श्लोकत्रयं येऽनुदिनं पठन्ति । ते दुःखजातं बहुजन्मसञ्चितं हित्वा पदं यान्ति तदेव शम्भोः ॥

७९. 'रामस्तुतिः.' आह्निककर्मप्रकाशे—प्रातः स्मरामि रघुनाथमुखारविन्दं मन्दस्मितं मधुरभाषि विशालभालम् । कर्णावलम्बिचलकुण्डलशोभिगण्डं कर्णान्तदीर्घनयनं नयनाभिरामम् ॥ प्रातर्भजामि रघुनाथकरारविन्दं रक्षोगणाय भयदं वरदं निजेभ्यः । यद्राजसंसदि विभज्य महेशचापं सीताकरग्रहणमङ्गलमाप सद्यः ॥ प्रातर्नमामि रघुनाथपदारविन्दं वज्राङ्कुशादिशुभरेखि सुखावहं मे । योगीन्द्रमानसमधुव्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ॥ प्रातर्वदामि वचसा रघुनाथनाम वाग्दोषहारि सकलं शमलं निहन्ति । यत्पार्वती स्वपतिना सह मोक्षकामा प्रीत्या सहस्रहरिनामसमं जजाप ॥ प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं नीलाम्बुदोत्पलसितेतररत्ननीलाम् । आमुक्तमौक्तिकविशेषविभूषणाढ्यां ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ यः श्लोकपञ्चकमिदं प्रयतः पठेद्धि नित्यं प्रभातसमये पुरुषः प्रबुद्धः । श्रीरामकिङ्करजनेषु स एव मुख्यो भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥

८०. 'ग्रहस्तुतिर्वामनपुराणे.'—ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥

८१. 'ऋषिस्तुतिः.'—भृगुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः । रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च । सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥ सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त । भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलितं च तेजः । नभः सशब्दं महता सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥ इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् । दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥

८२. 'पुण्यश्लोकजनस्तुतिः.' आचारमयूखे—पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।

पञ्चकं ना स्मरेन्नित्यं महापातकनाशनम् ॥ अविमुक्तचरणयुगलं दक्षिणमूर्तेश्च कुक्कुटचतुष्कम् । स्मरणमपि वाराणस्या निहन्ति दुःस्वप्नमपशकुनं च ॥

८३. 'अनेकदेवतास्तुतिफलम्.' पद्मपुराणे—उमा उषा च वैदेही रमा गङ्गेति पञ्चकम् । प्रातरेव पठेन्नित्यं सौभाग्यं वर्धते सदा ॥ सोमनाथो वैजनाथो धन्वन्तरिरथाश्विनौ । पञ्चैतान्यः स्मरेन्नित्यं व्याधिस्तस्य न बाधते ॥ कपिलः कालियोऽनन्तो वासुकिस्तक्षकस्तथा । पञ्चैतान्स्मरतो नित्यं विषबाधा न बाधते ॥ हरं हरिं हरिश्चन्द्रं हनूमन्तं हलायुधम् । पञ्चकं वै स्मरेन्नित्यं घोरसङ्कटनाशनम् ॥ रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम् । पञ्चैतान्संस्मरेन्नित्यं भवबाधा विनश्यति ॥ आदित्यश्च उपेन्द्रश्च चक्रपाणिर्महेश्वरः । दण्डपाणिः प्रतापी स्यात्क्षुद्बाधा च न बाधते ॥ वसुर्वरुणसोमौ च सरस्वती च सागरः । पञ्चैतान्संस्मरेद्यत्र तृषा तत्र न बाधते ॥ सनत्कुमारदेवर्षिशुकभीष्मप्लवङ्गमाः । पञ्चैतान् स्मरतो नित्यं कामस्तस्य न बाधते ॥ रामलक्ष्मणौ सीता च सुग्रीवो हनुमान् कपिः । पञ्चैतान्स्मरतो नित्यं महाबाधा प्रमुच्यते ॥ कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् । तस्य स्मरणमात्रेण गतं नष्टं च लभ्यते ॥ प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् । रुक्माङ्गदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान् नमामि ॥ धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन । शत्रुर्विनश्यति धनञ्जयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ काश्यां वै भैरवो देवः संसारभयनाशनः । अनेकजन्मजं पापं स्मरणेन विनश्यति ॥ वाराणस्यां पूर्वभागे व्यासो नारायणः स्वयम् । तस्य स्मरणमात्रेण अज्ञानी ज्ञानवान्भवेत् ॥ वाराणस्यां परे भागे भीमचण्डी महासती । तस्याः स्मरणमात्रेण विजयी भव सर्वदा ॥ वाराणस्यामुत्तरे तु सुमन्तुर्नाम वै द्विजः । तस्य स्मरणमात्रेण निर्धनो धनवान्भवेत् ॥ वाराणस्यां दक्षिणे तु कुक्कुटो नाम वै द्विजः । तस्य स्मरणमात्रेण दुःस्वप्नः सुखदो भवेत् ॥ विश्वेशं माधवं धुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥

८४. 'स्नानात्पूर्वं भक्षणयोग्याः पदार्थाः.' चतुर्विंशतिमते—इक्षुरापः फलं मूलं पयस्ताम्बूलमौषधम् । भक्षयित्वापि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ ( आरोग्याभाव एवायं विधिः । आरोग्ये सति तु स्नानसन्ध्यादिकं कृत्वैवेक्ष्वादिभक्षणं कार्यम् ) ॥

८५. 'स्नानम्.' कात्यायनपरिशिष्टसूत्रे—अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशतिलसुमनसऽआहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्योरुꣳ हीति तोयमामन्त्र्यावर्त्तयेद्येते शतमिति सुमित्रिया नऽइत्यपोऽञ्जलिनादाय दुर्मित्रियाऽइति द्वेष्यं प्रति निषिञ्चेत् कटिम्बस्त्यूरू जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य मनस्योदकमालभेदङ्गानि मृदेदं विष्णुरिति सूर्याभिमुखो निमज्जेदापोऽअस्मानिति स्नात्वोदिदाभ्यऽइत्युन्मज्य निमज्योन्मज्याचम्य गोमयेन विलिम्पेन्मानस्तोकऽइति । ततोऽभिषिञ्चेदिमं मे वरुणेति चतसृभिर्मापऽउदुत्तमं मुञ्चन्त्वेवभृथेत्यन्ते चैतन्निमज्योन्मज्याचम्य दर्भैः पावयेदापोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीरापऽइति द्वाभ्यामपोदेवा द्रुपदादिव शन्नो देवीरपाꣳ रसमपोदेवीः पुनन्तु मेति नवभिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽघमर्षणं त्रिरावर्तयेद्द्रुपदादिवायज्ञैरिति वा त्र्यृचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा स्मरणम् ॥

८६. 'स्नानकालः.' हेमाद्रौ—अरुणकिरणयुक्तां प्राचीं दिशमवलोक्य स्नायादिति ॥ याज्ञवल्क्यः—प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकृतं हि तत् । सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥ दक्षः—प्रातःस्नानं चरित्वाथ शुद्धे तीर्थे विशेषतः । प्रातःस्नानाद्यतः शुध्येत्कायोऽयं मलिनः सदा ॥ नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क्वचित् । दृष्टादृष्टफलं तस्मात् प्रातःस्नानं समाचरेत् ॥ आह्निककारिकासु—घटिकाद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशये । तिलगन्धाक्षतापुष्पैर्दर्भाद्यैः सहितः शुचिः ॥ प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः । यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥ प्रातःस्नानं सनक्षत्रं सन्ध्या नक्षत्रसंयुता । होमः प्रागुदयाद्भानोर्गायत्र्यास्तु ततो जपः ॥ कात्यायनः—यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गृहे च तदमन्त्रवत् ॥

८७. 'प्रातःस्नानफलम्.' याज्ञवल्क्यः— गुणा दश स्नानपरस्य साधो रूपं च तेजश्च बलं च शौचम् । आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च यशश्च मेधा ॥ नागदेवः—अगम्यागमनाच्चैव पापेभ्यश्च परिग्रहात् । रहस्यचरितात्पापान्मुच्यते स्नानयोगतः ॥

८८. 'प्रातःस्नानाभावे दोषः.' याज्ञवल्क्यः—अस्नात्वा नाचरेत्कर्म जपहोमादिकं तथा । लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥ स्विद्यन्ते हि सुप्तस्य इन्द्रियाणि स्रवन्ति च । अङ्गानि समतां यान्ति चोत्तमान्यधमैः सह ॥ नागदेवः—अस्नातस्य क्रियाः सर्वा भवन्ति निष्फला यतः । प्रातः समाचरेत्स्नानं तच्च नित्यमुपस्थितम् । अस्नातस्तु पुमान्नार्हो जपहोमादिकर्मसु । प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥ योगियाज्ञवल्क्यः—स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् । तस्मात्स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥

८९. 'स्नानार्थे उक्तं जलम्.' मरीचिः—भूमिष्ठमुद्धृतं वापि शीतमुष्णमथापि वा । गाङ्गं पयः पुनात्येव पापमामरणात्कृतम् ॥ यमः—आप एव सदा पूतास्तासां वह्निर्विशोधकः । तस्मात्सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् ॥ नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् । तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥ गार्ग्यः—कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । नित्यं याहच्छिकं चैव यथारुचि समाचरेत् ॥ नागदेवः—सरित्सु देवखातेषु तीर्थेषु च नदीषु च । क्रियास्नानं समुद्दिष्टं स्नानं तत्रामलाः क्रियाः ॥ वाप्यां कूपे तडागे वा नद्यां वा चोष्णवारिणा । प्रातःस्नानं सदा कुर्यादुष्णेनैव सदातुरः ॥

९०. 'उष्णोदकस्नाननिषेधः.' वृद्धमनुः—सङ्क्रान्त्यां रविवारे च सप्तम्यां राहुदर्शने । आरोग्ये पुत्रमित्रार्थे न स्नायादुष्णवारिणा ॥ मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा । अस्पृष्टस्पर्शने चैव न स्नायादुष्णवारिणा ॥

९१. 'स्नानभेदाः.' नागदेवः—असामर्थ्याच्छरीरस्य देशकालाद्यपेक्षया । मन्त्रस्नानादिकाः सप्त केचिदिच्छन्ति सूरयः । स्नानं तु द्विविधं प्रोक्तं मुख्यगौणप्रभेदतः । चतुर्विधं तत्र मुख्यं गौणं वै षड्विधं भवेत् ॥ सजीवपितृकः स्नायान्न्यस्तदक्षिणतःकचः । प्रमीतपितृकः स्नायात्सव्यभागकचः पुमान् ॥ (क्वचित्स्थले मुसलस्नानमप्युक्तम्) तच्चैवम्—निरुद्धकर्णनासस्तु मुसलस्नानमाचरेत् । उभे सन्ध्ये च स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः ॥ तिसृष्वपि हि सन्ध्यासु स्नातव्यं तु तपस्विभिः ॥

९२. 'प्रत्यक्षस्नानाभावे गौणस्नानानि.' योगियाज्ञवल्क्यः—मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥ आपोहिष्ठादिभि'र्मान्त्रं' मृदालम्भं च 'पार्थिवम्' ॥ 'आग्नेयं' भस्मना स्नानं 'वायव्यं' गोरजः स्मृतम् ॥ यत्तु सातपवर्षेण

स्नानं त'द्दिव्य'मुच्यते । 'वारुणं' चावगाहं तु 'मानसं' ह्यात्मचिन्तनम् ॥ लघुव्याससंहितायाम्—आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् । अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत् ॥ 'ब्राह्म्यं' तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः । 'यौगिकं' स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम् ॥ जाबालिः—अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् । आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥ ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥ चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् । दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः । अन्ते च वाससां त्यागस्तथा शुद्धा भवेत्तु सा ।

९३. 'स्नानादौ निषिद्धजलम्.' धन्वन्तरिः—तृणपर्णोत्करयुतं कलुषं विषसंयुतम् । योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम् । स बाह्याभ्यन्तरान्रोगान् प्राप्नुयात्क्षिप्रमेव हि ॥ वाचस्पतौ—स्नानमाचमनं दानं देवतापितृतर्पणम् । शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥ मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानादिकं वर्ज्यं वर्जयित्वा सुरापगाम् ॥ यदि विप्रः प्रमादेन शूद्रतोयं पिबेत्स्वयम् । उपोष्य बिल्वपत्रानां पलाशस्य कुशस्य च ॥ एतेषामुदकं पीत्वा तेन शुद्धिमवाप्नुयात् ॥ यमः—अन्त्यजैः खानिता कूपास्तडागानि तथैव च । एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ॥ वृद्धशातातपः—अन्त्यजैः खानिते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥ (एतद्वचनद्वयमापदनापद्विषयकमिति वाचस्पतौ स्पष्टीकृतम्) ॥ कात्यायनः—यच्च द्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥ धनुःसहस्राण्यष्टौ तु गतिर्यासां न विद्यते । न ता नदीः शब्दवहा गर्तास्ताः परिकीर्तिताः ॥ उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

९४. 'स्नानार्थे उक्तदिशः.' विष्णुः—स्रोतसोऽभिमुखं स्नायान्नदीषु प्रवहज्जले । स्थावरे न तडागे च रवेरभिमुखं सदा ॥ स्रोतसोऽभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै । स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा ॥ गृहे गृहमुखः कूपे तडागे सूर्यसन्निधौ ॥ प्रातः संक्षेपतः स्नानं शौचार्थे तु तदिष्यते ॥ रेणुः—तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् । (नद्यादौ तु प्रवाहाभिमुखो वा स्नानमाचरेत् ॥ नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतःस्थितो

द्विजः । या याः समुद्रगा नद्यस्तासु स्नानं तु संमुखम् । सर्वेषां शाखिनामेवं विना वाजसनेयिनः ॥

९५. 'गृहे स्नानादिविचारः.' बौधायनः—गृहस्नाने न तु प्रोक्तं मार्जनं तर्पणादिकम् । नान्तराचमनं प्रोक्तं पश्चादाचम्य शुद्ध्यति ॥ आह्निककारिकासु—पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम् । द्विराचम्य कराभ्यां तु दर्भान्धृत्वा शिखां स्पृशेत् ॥ द्वौ कुशौ दक्षिणे हस्ते त्रयः सव्ये तथासने । पादमूले शिखायां च एकैकं धारयेत्कुशम् ॥ प्राणायामत्रयं कृत्वा कालज्ञानं ततः स्मरेत् ॥

९६. 'स्नानकाले नारायणस्मरणम्.' लघुव्याससंहितायाम्—आपो नारायणोद्भूताः स्नाने वास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ॥

९७. 'सङ्कल्पावश्यकता.' बृहद्यमः—सङ्कल्पश्च यथा कुर्यात्स्नानदानव्रतादिके ॥

९८. 'स्नाने आसनम्.' कालिकापुराणे—तोये शिलामयं कुर्यादासनं कौशमेव वा ॥

९९. 'स्नाने जलादिविचारः.'—अभावे देवखातानां सरितां सरसां तथा । उद्धृत्य चतुरः पिण्डान् पारके स्नानमाचरेत् ॥ ( पारके इत्यनुत्सृष्टजले ) ॥ चतुर्हस्तसमायुक्तं समन्ताच्चतुरस्रकम् । प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा चावाहनी स्मृता ॥ विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुदेवता । त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ॥ पश्चाद्गङ्गादितीर्थानि प्रार्थयेच्च समन्ततः ॥

१००. 'शिरःस्नानम्.' मार्कण्डेयपुराणे—शिरःस्नानं च कुर्वीत दैवं पित्र्यमथापि वा ॥

१०१. 'आर्द्रवस्त्रनिष्पीडनम्.' वृद्धमनुः—निष्पीड्य स्नानवस्त्रं तु पश्चात्सन्ध्यां समाचरेत् । अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ॥ प्रयोगपारिजाते—स्नानं कृत्वार्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्द्विजः । आर्द्रवस्त्रमधस्ताच्चेत्पुनः स्नानेन शुद्ध्यति ॥

---

( १ ) एतेन वाजसनेयिनां समुद्रगामिनीषु नदीषु प्रवाहाभिमुखस्नाननिषेधेन तैः प्रत्यक्षसमुद्रसङ्गमवतीष्वपि गङ्गागोदादिनदीषु सूर्याभिमुखं स्नानं कर्तव्यम् । समुद्रगा इत्युक्तत्वात् । गङ्गादिनदीसङ्गमपर्यन्तं प्रवाहनामादिधारकासु यमुनाभीमातुङ्गभद्रादिषु तु स्वतःसागरगामित्वायोगात्प्रवाहाभिमुखमेव स्नानं कर्तव्यमिति प्रतिभाति ।

१०२. 'आकण्ठस्नानम्.' कात्यायनत्रिकण्डिकासूत्रे हरिहरभाष्ये—जटिलस्य शिरोरोगिणश्चाकण्ठमज्जनं स्नानम् । सभर्तृकयोषितां च ग्रहणादिनिमित्तं गङ्गादितीर्थेषु संक्रान्त्यादिपर्वनिमित्तं च फलप्रदम् । नद्यादिष्वपि सशिरस्कमेव नित्यमेव स्त्रीशूद्राणां सर्वत्र तूष्णीं स्नानम् ॥

१०३. 'मङ्गलस्नानम्.' ग्रन्थान्तरे—सर्वौषधी कृष्णतिला गन्धमामलकैस्तथा । सुगन्धिना चम्पकादि तैलं युक्तं सचूर्णकैः ॥ उद्वर्त्याङ्गानि चूर्णै तत् मङ्गलस्नानमाचरेत् । एवं स्नानं प्रकुर्वीत ब्राह्मणैः सह निश्चितम् ।

१०४. 'तीर्थभेदाः.' 'मानसतीर्थानि.' याज्ञवल्क्यः—अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ वाचस्पतावगस्तिः—सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥ दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा । एतत्ते कथितं देवि मानसं तीर्थलक्षणम् ॥ 'शारीरतीर्थानि'—यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते । मनो विशुद्धं पुरुषस्य तीर्थं वाचां यमस्त्विन्द्रियनिग्रहस्तपः । एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति ॥ 'भौमतीर्थानि'—प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च । प्रयागं च प्रवक्ष्यामि धर्मारण्यं तृतीयकम् । एवमादीनि तीर्थानि स्नानकार्ये निबोधत ॥ परं च—चित्तमन्तर्गतं दुष्टं तीर्थस्नानान्न शुध्यति । शतशोऽथ जलैर्धौतं सुराभाण्डमिवाशुचि ॥ अमरः—अङ्गुल्यग्रे तीर्थं 'दैवं' स्वल्पाङ्गुल्योर्मूले 'कायम्' । मध्येङ्गुष्ठाङ्गुल्योः 'पित्र्यं' मूले त्वङ्गुष्ठस्य 'ब्राह्मम्' ॥ याज्ञवल्क्यः—कनिष्ठदेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ आह्निककारिकासु—ब्राह्मणो ब्रह्मतीर्थेन दृष्टिपूताभिराचमेत् । कण्ठगाभिर्नृपः शुध्येन्नाभिगाभिस्तथोरुजः ॥ स्त्रियश्च शूद्रः संस्पर्शे मन्त्रेणापि विशुध्यति ॥ औशनः—हृद्गाभिः पूयते विप्रः कटिगाभिर्नृपः शुचिः । प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रैः स्पर्शनं तथा ॥

१०५. 'स्नाने उक्ततीर्थानि.' अग्निपुराणे—नदीदेवनिखातेषु तडागेषु सरस्सु च । स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च । निपानादुद्धृतं पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते । तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम् ॥ वाचस्पतौ—ब्राह्मणा

जङ्गमं तीर्थं निर्मलं सार्वकामिकम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥ किञ्च पराशरः—ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्योऽनिलस्तथा । ते सर्वे ह्यपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥

१०६. 'गृहे प्रातःस्नानसङ्कल्पः'—प्रथमतः सूर्याभिमुखः स्यात् शिलासने स्थितो दारुजासने स्थितो वा आदौ हस्तौ पादौ प्रक्षाल्य गण्डूषत्रयं कुर्यात् । पश्चात् अञ्जलावुदकं गृहीत्वा स्नानसङ्कल्पं कुर्यात् यथा—विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे (भारतखण्डे) जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरे तीरे श्रीशालिवाहनशाके बौद्धावतारे अस्मिन्वर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकवासरे अमुकतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शासनभोजनशयनगमनादिकृतकर्मदोषनिरासद्वारा त्रिविधतापोपशमनार्थं श्रीपरमेश्वरप्रीत्यर्थं शीतोदकेन उष्णोदकेन वा (अमुकतीर्थे गृहे तडागतटे वा) प्रातःस्नानमहं करिष्ये ॥ (इति सङ्कल्प्य पश्चात् तीर्थादिनामोच्चारपूर्वकं स्नायात्) ॥ 'तीर्थप्रार्थना'—आपो नारायणोद्भूताः स्नाने वास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मराम्यहम् ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता । याचितं देहि मे तीर्थं सर्वपापैः प्रमुच्यते ॥ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । आगच्छंतु पवित्राणि स्नानकाले सदा मम ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ नन्दिनी नलिनी सीता मालती च मलापहा । विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥ भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी । द्वादशैतानि नामानि यत्र यत्र जलाशये ॥ स्नानोद्यतः पठेद्यत्र तत्रैव निवसाम्यहम् । एतान्मन्त्रान्पठित्वान्ते सर्वाङ्गस्नानमाचरेत् ॥ (एवं स्नायात् शरीरं प्रमृज्य गृहे प्रविशेत्) ॥

१०७. 'अथ नद्यादौ नित्यस्नानप्रयोगः'—शुचिर्भूतः कर्ता शुभ्रां

यथादेशसम्भवां वा मृदमार्द्रां गोमयं कुशान् तिलाक्षतान् सुरभीणि पुष्पाणि भस्म चादाय तीर्थतटे गच्छेत् । तदनन्तरं सूर्याभिमुखस्तीर्थानि प्रार्थयेत् । 'तीर्थप्रार्थना'—नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् । सा गतिः सर्वजन्तूनां गौतमीतीरवासिनाम् ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता । याचितं देहि मे तीर्थं सर्वपापैः प्रमुच्यते ॥ अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव । वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥ अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति याः । देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति सम्प्रार्थ्य हस्तौ पादौ प्रक्षाल्याचम्य 'सङ्कल्पः'[१]—अद्य पूर्वोच्चरित एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि जन्मान्तरे वा कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शभुक्ताभुक्तपीतापीतादिसकलपातकनिरासपूर्वकमासनभोजनशयनगमनादिष्वनृतभाषणादिदोषनिरासद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकतीर्थे स्नानमहं करिष्ये ॥ इति संङ्कल्प्य—पश्चात्—'तीर्थाभिमन्त्रणम्[२]—*** ॐ उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणायाभिष्ठितो वरुणस्य पाशः । १ २३/८ ॥ इति मन्त्रेण न्युब्जाञ्जलिहस्तेन तोयमभिमन्त्रयेत् ॥ 'जलावर्तनम्'[३]—ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः । २ (सूत्रोक्तः / पा० गृ०) ॥ 'पूर्णा-

---

(१) केचित्तु प्रायश्चित्ते श्रावण्यादिनैमित्तिकस्नाने हेमाद्रिप्रोक्तं महासङ्कल्पं कुर्वन्ति तीर्थस्नानादावन्यतः कारयन्ति च । स सङ्कल्पः परिशिष्टप्रकरणे द्रष्टव्यः ॥ (२) विष्णुस्मृतिः—ब्रह्मा विष्णुश्च रुद्रश्च सर्वमोमिति चोच्यते । सम्पन्नेऽसुरसंयाने नम्यते च मुमुक्षुभिः ॥ (३) इति मन्त्रेण जलं दक्षिणहस्ताङ्गुलिभिर्दक्षिणावर्तं त्रिवारमावर्तयेत् (भ्रामयेत्) ॥ (४) इति मन्त्रेणांजलिस्थमुदकं स्वशत्रून्मनसा विचिन्त्य तन्नाशार्थं स्ववामभागे तीर्थतटे क्षिपेत् ॥

ञ्जलिनापोग्रहणम्'—* * ॥ ॐ सुमित्रिया नऽआपऽओषधयः सन्तु * * । ३ $\frac{२२}{६}$ ॥ (इति मन्त्रेण जलाञ्जलिं गृह्णीयात्)॥ 'तीर्थतटे जलप्रक्षेपणम्'—* * ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः । ४ $\frac{२२}{६}$ ॥ मृत्तिकालेपनम्—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा ँ सुरे स्वाहा । ५ $\frac{१५}{५}$॥ (अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके ब्रह्मपूतासि काश्यपेनाभिवन्दिता । त्वया हतेन पापेन गच्छामि परमां गतिम् ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्) । (इति सम्प्रार्थ्य । नाभिमात्रं तीर्थजलं प्रविश्य सूर्याभिमुखं स्थित्वा स्नायात् । ) तत्र मन्त्रः— ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳ हि रिप्रम्प्रवहन्ति देवीः * * । ६ $\frac{२}{४}$ ॥ इति मन्त्रेण निमज्य पुनः—ॐ उदिदाभ्यः शुचिरापूतऽएमि * । ७ $\frac{२}{४}$ (इति मन्त्रेण द्वितीयवारं निमज्य)॥ (पुनस्तूर्ष्णीं निमज्योन्मज्याचमेत्) 'गोमयलेपनम्'—(अग्रमग्रचरन्तीनामोषधीनां वनेवने । तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ तन्मे रोगांश्च शोकांश्च पापं मे हर गोमय) । (इति मन्त्रे गोमयमभिमन्त्र्य)॥ ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमि त्वा हवामहे । ८ $\frac{१६}{१६}$ ॥ 'भस्मलेपनम्' (क्षेपकम्)—(जलमिति भस्म । स्थलमिति भस्म । व्योमेति

---

(१) मृत्तिकामादाय तस्याः त्रिभागान्कृत्वा प्रथमभागं वामहस्ते गृहीत्वा तेन नाभेरधः कटिप्रदेशमनुलेपयेत् । हस्तं प्रक्षाल्य ॥ (२) पुनस्तेनैव हस्तेन द्वितीयभागेन बस्तिं ऊरू जङ्घे चरणौ करौ च प्रत्येकं तूष्णीं त्रिस्त्रिरनुलिप्य पुनर्हस्तं प्रक्षाल्याचम्य तीर्थोदकं नमस्कुर्यात् ॥ (३) इति मन्त्रेण तृतीयभागेन दक्षिणहस्तेन ललाटादिनाभिपर्यन्तानि गात्राण्युपलिप्य हस्तं प्रक्षाल्याचम्य तीर्थोदकं नमस्कुर्यात् ॥ (४) इति मन्त्रेण सोदकं गोमयं सूर्याय दर्शयित्वा तेन त्रिवारमङ्गानि ललाटादिपादतलपर्यन्तानि मृल्लेपनवदनुलिप्य क्षालयेत् ॥

भस्म । सर्वꣳह वा इदं भस्म । मन एतानि चक्षूꣳषि भस्मानीति ) ॥
ॐ प्प्रसद्य भस्म्मना योनिमुपश्च पृथिवीमग्ग्ने । सꣳसृज्ज्य मातृभिष्ट्टञ्ज्योतिष्म्मान्पुनरा सदः । ९ ॥
( इति क्षेपकम् ) ॥ 'मार्जनम्'—ॐ इमम्मे व्वरुण श्रुधीहवमद्या च मृडय । त्वामवस्युरा चके ।१० ॥ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेहबोध्युरुशꣳसमानऽआयुः प्रमोषीः । ११ ॥ त्वन्नोऽअग्ग्ने व्वरुणस्य व्विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ट्ठो व्वह्नितमः शोशुचानो व्विश्वाद्द्वेषाꣳसि प्रमुमुग्ध्यस्म्मत् । १२ ॥ सत्त्वन्नोऽअग्ग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्वनो व्वरुणꣳरराणो व्वीहि मृडीकꣳसुहवो नऽएधि । १३ ॥ मापोमौषधीर्हिꣳसीर्द्धाम्म्नोधाम्म्नो राजँस्ततो व्वरुण नो मुञ्च । यदाहुरग्घ्न्या ऽइति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्च । १४ ॥ उदुत्तमं व्वरुणपाशमस्म्मदवाधमं व्वि मध्यमꣳश्रथाय । अथा व्वयमादित्यव्व्रते तवानागसो ऽअदितये स्याम । १५ ॥ मुञ्चन्तु मा शपथ्थ्यादथो वरुण्यादुत । अथो यमस्य पड्वीꣳशात्सर्व्वस्म्माद्देव किल्बिषात् । १६ ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अवदेवैर्द्देवकृतमेनो यासिषमव मर्त्त्यैर्म्मर्त्त्यकृतम्पुरुराव्णो देव रिषस्पाहि । १७ ॥ ( इति मन्त्रैः सर्वाङ्गानि मार्जयित्वा । पश्चात्तूष्णीं स्नात्वाचम्य ) 'पुनर्दर्भैर्मार्जनम्'—ॐ आपो हिष्ठा मयोभुवस्तानऽ-

---

( १ ) इति मन्त्रेण ललाटाद्यङ्गेषु भस्मलेपनं कृत्वा ॥ ( २ ) तत्र सजलेन कुशत्रयेण नाभिदक्षिणपार्श्वमारभ्य शिरोपरि नीत्वा नाभिवामपार्श्वपर्यन्तं प्रदक्षिणमात्मानं पावयेत् ॥

ऊर्जे दधातन । महे रणाय चक्षसे । १८ ५०/११ ॥ यो वः
शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः
। १९ ५१/११ ॥ तस्मा ऽअरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः । २० ५२/११ ॥ इदमापः प्रवहतावद्यञ्च
मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे ऽअभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु । २१ १७/६ ॥
हविष्मतीरिमा ऽआपो हविष्माँ २ ऽआविवासति ।
हविष्मान्देवो ऽअध्वरो हविष्माँ २ ऽअस्तु सूर्यः ।
२२ २३/६ ॥ देवीरापो ऽअपान्नपाद्यो व ऽऊर्म्मिर्हविष्य ऽइ-
न्द्रियावान्मदिन्तमः । तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो
येषां भाग स्थ स्वाहा । २३ २७/६ ॥ कार्षिरसि समुद्रस्य
त्वाक्षित्या ऽउन्नयामि । समापो ऽअद्भिरग्मत समोष-
धीभिरोषधीः । २४ २८/६ अपो देवा मधुमतीरगृभ्ण-
न्नूर्जस्वती राजस्वश्चितानाः । याभिर्म्मित्रावरुणावभ्य-
षिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः । २५ १/१० द्रुपदादिव
मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्य-
मापः शुन्धन्तु मैनसः । २६ २०/१० ॥ शन्नो देवीरभिष्टय ऽ
आपो भवन्तु पीतये । शं य्योरभिस्रवन्तु नः । २७ १२/३६ ॥
अपाᳬरसमुद्वयसᳬसूर्य्ये सन्तᳬसमाहितम् । अपाᳬर-
सस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय
त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
२८ ३/२ ॥ अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजा-
भ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ।
२९ ३८/१९ ॥ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पि-
तामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा* ।

पुनन्तु मा पितामहाऽपुनन्तु प्रपितामहाऽ ।
३० $\frac{३७}{१९}$ ॥*॥ पुनन्तु मा पितामहाऽपुनन्तु प्रपितामहाऽ । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै । ३१ $\frac{३७}{१९}$ ॥ अग्नऽआयूंषि पवसऽआसुवोर्जमिषञ्चनः । आरे बाधस्व दुच्छुनाम् । ३२ $\frac{३८}{१९}$ ॥ पुनन्तु मा देवजनाऽपुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा । ३३ $\frac{३९}{१९}$ ॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् अग्ने क्रत्वा क्रतूँ २ । ऽरनु । ३४ $\frac{४०}{१९}$ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा । ३५ $\frac{४१}{१९}$ ॥ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा । ३६ $\frac{४२}{१९}$ ॥ उभाभ्यान्देव सवितः पवित्रेण सवेन च । माम्पुनीहि विश्वतः । ३७ $\frac{४३}{१९}$ ॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् । ३८ $\frac{४४}{१९}$ ॥ (इति मन्त्रैर्मार्जयित्वा पश्चादुदकं स्पृशेत् ॥)

ततः—ॐ चित्पतिर्म्मा पुनातु[1]*देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् । ३९ $\frac{४}{४}$॥ [2]वाक्पतिर्म्मा*पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य॰ । ४० $\frac{५}{४}$ ॥ [3]* देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य॰ । ४१ $\frac{४}{४}$ ॥ ततः—ॐ पुनातु—इमम्मे वरुण॰ । ४२ $\frac{१}{२१}$ ॥ इति मन्त्रेण ॐ भूः पुनातु—तत्त्वा या॰—४३ $\frac{२}{२१}$ ॥ (इति मन्त्रेण) ॐ भुवः पुनातु—त्वन्नोऽअ॰—४४ $\frac{३}{२१}$ ॥ (इति

(१) इति मन्त्रेण नाभेरूर्ध्वं मार्जयेत् ॥ (२) इति मन्त्रेण नाभेरधो मार्जयेत् । (३) इति मन्त्रेण सर्वाङ्गं मार्जयेत् ॥

मन्त्रेण) ॐस्वः पुनातु—सत्वन्नोऽअ० । ४५ $\frac{४}{२७}$ ॥ ( इति मन्त्रेण )
ॐ महः पुनातु—मापो मौष० । ४६ $\frac{२२}{६}$ ॥ ( इति मन्त्रेण )
ॐ जनः पुनातु—उदुत्तमम० । ४७ $\frac{१२}{१२}$ ॥ ( इति मन्त्रेण )
ॐ तपः पुनातु—मुञ्चन्तु मा० । ४८ $\frac{९०}{१२}$ ॥ ( इति मन्त्रेण )
ॐ सत्यं पुनातु—अवभृथ नि० । ४९ $\frac{४८}{३}$ ॥ ( इति मन्त्रेण )
ॐ तत्सवितुर्व० । ५० $\frac{३५}{३}$ ॥ सर्वं पुनातु ॥ ( इति कुशैर्मार्जयित्वा ) ॥'अपामार्गेण मार्जनम्—' ( क्षेपकम् ) ॐ अपाघमप किल्बिषमपकृत्यामपोरपः। अपामार्ग्गत्वमस्म्मदपदुःष्वप्न्यꣳसुव । ५१ $\frac{११}{३५}$ ॥ ( इति मन्त्रेणापामार्गैस्त्रिभिर्मार्जयेत् ) ॥ ततः—'दूर्वाङ्कुरेण मार्जनम्'—ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्प्परि । एवानो दूर्व्वे प्रतनु सहस्रेण शतेन च । ५२ $\frac{२०}{१३}$ ॥ ( इति क्षेपकम् ) ( इति मन्त्रेण दूर्वाभिस्त्रिभिर्मार्जयेत् ) ॥ 'अघमर्षणम्'—ततो वक्ष्यमाणषट्रूपक्षाणामन्यतमेनान्तर्जले मग्नोऽनुच्छ्वसन्नघमर्षणं कुर्यात् । तद्यथा—ॐ द्रुपदादि० । ५३ $\frac{२०}{२०}$ ॥ ( इति वा त्रिः पठेत् ) ॥ आयङ्गौः पृश्निरक्क्रमीदसदन्न्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः । ५४ $\frac{६}{३}$ ॥ ( इति वा त्रिः पठेत् ) ॥ 'सशिरसं प्राणायामं' वा त्रिः पठेत् ॥ यथा—ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० स्वरोम् । ५४ $\frac{५३}{३}$ ॥ ( इति सप्तव्याहृतिपूर्विकां सशिरस्कां गायत्रीं वा त्रिः पठेत् ॥ ॐ इति वा त्रिः पठेत् ) 'विष्णुध्यानम्'— ( यद्वा परमात्मानं विष्णुं शेषशायिनं सायुधं सश्रीकमेकाग्रमनसा ध्यायेत् ) ॥ एवं स्नानं कृतं स्यात् ॥ 'स्नानाङ्गतर्पणम्'—ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृ० । ॐ भुवर्देवास्तृ० ॥ ॐ स्वर्देवास्तृ० । ॐ भूर्भुवः स्वर्देवास्तृ० । ॐ सनकादि-

(१) अपामार्गैस्तथा दूर्वाभिर्मार्जनं श्रावण्यादिनैमित्तिकस्नाने कुर्यान्न तु नित्यस्नाने ॥ (२) प्रथमे देवतर्पणे पूर्वाभिमुखः सन्कुशत्रयं गृहीत्वा तदग्रैः सव्येन देवतीर्थेनोङ्कारपूर्वकं देवेभ्य एकैकमञ्जलिं दद्यात् ॥ (३) द्वितीये ऋष्यादितर्पणे उदगग्रान् दर्भान्धृत्वा तदग्रैर्निवीत्या प्रजापतितीर्थेनोङ्कारपूर्वकमृषिभ्यो द्वौ द्वावञ्जली देयौ ॥

द्वैपायनादयो ऋषयस्तृप्यन्ताम् । ॐ भूर्ऋषयस्तृ० । ॐ भुवर्ऋष-
यस्तृ० । ॐ स्वर्ऋषयस्तृ० । ॐ भूर्भुवःस्वर्ऋषयस्तृ० ॥ ॐ कव्य-
वाडनलादयः पितरस्तृप्यन्ताम् । ॐ भूःपितरस्तृ० । ॐ भुवःपि-
तरस्तृ० । ॐ स्वःपितरस्तृ० । ॐ भूर्भुवःस्वःपितरस्तृ० ॥ ( ततः
'आचम्य' सव्येन यक्ष्मतर्पणं कुर्यात् । ) 'यक्ष्मतर्पणम्'—यन्मया दू-
षितं तोयं शारीरमलसम्भवात् । तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते
तिलोदकम् ॥ ( इति मन्त्रेण तीर्थतटे तिलमिश्रं जलाञ्जलिं निक्षिपेत् । )
पश्चात् 'लतादिकेषु शिखोदकत्यागः—लतागुल्मेषु वृक्षेषु पितरो
ये व्यवस्थिताः । ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥ (इति
मन्त्रेण स्वदक्षिणभागे शिखाग्रं निष्पीडयेत् । ततो धौते वाससी परिधाय
भस्मादि धारयेत् ततो गृहे व्रजेत् ) इति नद्यादौ नित्यस्नानप्रयोगः ॥

१०८. अथ 'प्रातःस्मरणसूक्तम्.' हरिः—ॐ प्प्रातरग्निं-
स्प्रातरिन्द्रꣳ हवामहे प्प्रातर्म्मित्रावरुणा प्प्रातरश्श्वि-
ना । प्प्रातर्ब्भगम्पूषणम्ब्रह्मणस्प्पतिम्प्रातः सोमम्मुत रु-
द्रꣳ हुवेम । १ ३४/३४ ॥ प्प्रातर्जितम्भगमुग्ग्रꣳ हुवेम व्वयम्पु-
त्रमदितेर्य्यो व्विधर्त्ता । आद्ध्रश्चिद्यम्मन्यमानस्तुरश्चिद्रा-
जा चिद्यम्भगम्भक्षीत्याह । २ ३५/३४ ॥ भग प्प्रणेतर्ब्भग सत्त्य-
राधो भगेमान्धियमुदवाददन्नः । भग प्प्रनो जनय
गोभिरश्वैर्ब्भग प्प्रनृभिर्न्नृवन्तः स्याम । ३ ३६/३४ ॥ उतेदा-
नीम्भगवन्तः स्यामोत प्प्रपित्त्वऽउत मद्ध्येऽअह्नाम् । उ-
तोदिता मघवन्त्सूर्य्यस्य व्वयन्देवानाꣳ सुमतौ स्याम ।
४ ३७/३४ ॥ भगऽएव भगवाँ२ऽअस्तु देवास्तेन व्वय-
म्भगवन्तः स्याम । तन्त्वा भग सर्व्वऽइज्जोहवीति सनो
भगपुरऽएता भवेह । ५ ३८/३४ ॥ समध्वरायोषसो नमन्त
दधिक्रावेव शुचये पदाय । अर्व्वाचीनं व्वसुविदम्भगन्नो

(१) तृतीये पितृतर्पणे भुग्नान्दक्षिणाग्रमूलान् दर्भान्धृत्वापसव्येन पितृतीर्थेनोङ्कारपूर्वकं पितृभ्यस्त्रींस्त्रीनञ्जलीन्दद्यात् ॥

रथमिवाश्वा वाजिनऽआवहन्तु । ६ ३९/३४ ॥ अश्वावती-र्गोमतीर्नऽउषासो वीरवतीः सदमुच्छन्तु भद्राः । घृत-न्दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः । ७ ४०/३४ ॥ इति प्रातःस्मरणसूक्तम् ॥

१०९. 'वस्त्रधारणम्.' पारस्करगृह्यसूत्रे मन्त्रः—परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ अहतं वासो धौतं वामौत्रेण आच्छादयीत परिधास्य इति ॥ हरिहरभाष्ये—अहतं नवं सदशं पवित्रं वास आच्छादयीत परिदध्यात् । तदलाभे अमौत्रेण अरजकेण धौतं क्षालितं परिधास्य इत्यादिना अभिसंव्ययिष्य इत्यन्तेन मन्त्रेण ॥

११०. 'स्नानानन्तरं वस्त्रपरिधानम्.' नागदेवः—स्नात्वैव वाससी धौते अक्लिन्ने परिधापयेत् । प्रक्षाल्य चरणद्वन्द्वं हस्तौ प्रक्षालयेत्ततः । अभावे धौतवस्त्रस्य पट्टक्षौमादिकानि च । कुतपं योगपट्टं वा विवासा येन नो भवेत् ॥ याज्ञवल्क्यः—वामकुक्षौ च नाभौ च पृष्ठे चैव यथाक्रमम् । त्रिकच्छेन समायुक्तो द्विजोऽसौ मुनिरुच्यते ॥

१११. 'उक्तवस्त्रधारणम्.' मनुः—ब्राह्मणस्य सितं वस्त्रं माञ्जिष्ठं नृपतेः स्मृतम् । पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥ देवलः—स्वयं धौतेन कर्तव्याः क्रियाधर्मा विपश्चिता । न तु नेजकधौतेन नाहतेन च कर्हिचित् ॥ याज्ञवल्क्यः—अष्टहस्तं नवं श्वेतं सदशं नान्यधारितम् । अहतं तद्विजानीयात्सर्वकर्मसु पावनम् । यन्त्रनिर्मुक्तं प्रक्षालितमप्यहतमित्याह ॥ सत्यातपः—अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा । शस्तं माङ्गलिकेष्वेतत्तावत्कालं प्रकीर्तितम् ॥

११२. 'वर्ज्यवस्त्राणि.' दक्षः—ईषद्धौतं स्त्रिया धौतं शूद्रधौतं तथैव च । प्रतारितं यमदिशि गर्हितं सर्वकर्मसु ॥ आपस्तम्बः—आर्द्रवासा तु यः कुर्याज्जपहोमपरिग्रहान् । सर्वं तद्राक्षसं विन्द्यात्कर्मजातं च यत्कृतम् ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा । जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥ न स्यूतेन न दग्धेन पारक्येण विशेषतः । मूषकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः ॥ आह्निककारिकासु—आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् । शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥ नानारङ्गविराजितं गतदशं कोशोद्भवं वासितं नीलीरङ्गसमन्वितं च समलं

नैवायतं चास्ति यत् । दग्धं चैव च खण्डितं च बहुधा युद्धादिकैश्चित्रितं तद्वर्ज्यं खलु देवपूजनविधौ वस्त्रं कुसुम्भारुणम् ॥

११३. 'धौतवस्त्रप्रसारणम्.' शातातपः—प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् । दक्षिणाग्रं पश्चिमाग्रं पुनः प्रक्षालनं भवेत् ॥

११४. 'उपवस्त्रपरिधानाऽवश्यकता.' विष्णुपुराणे—होमदेवार्चनाद्यासु क्रियासु पठने तथा । नैकवस्त्रः प्रवर्तेत द्विजो नाचमने जपे ॥ व्याघ्रपादः—नैकवस्त्रो द्विजः कुर्याद्भोजनं च सुरार्चनम् ॥ आह्निककारिकासु—एकवस्त्रं विनापात्रं सव्ययज्ञोपवीतकम् । प्रत्यक्षं तु नदीशौचं कुर्वञ्छूद्रत्वमाप्नुयात् ॥

११५. 'उपवस्त्रधारणमन्त्रः.' पारस्करः—यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् ॥ हरिहरभाष्ये—अथोत्तरीयं यशसा मेति अथोत्तरीयपरिधानानन्तरं तादृशमेवोत्तरीयं वासो यशसा मेत्यादिना यशो मा प्रतिपद्यतामित्यन्तेन आच्छादयीतेति गतेनाख्यातेन सम्बन्धः । एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥

११६. 'उपवस्त्राभावे प्रतिनिधिः.' स्मृत्यन्तरे—यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे चतुर्थकम् ॥ परशुरामनिबन्धे तु—उपवस्त्रं यदा न स्यात्तदा चत्वारि धारयेत् । तस्मात्सन्ध्यादिकर्मसमये उपवस्त्रमवश्यमेव धार्यम् ॥

११७. 'वस्त्रादिशुद्धिः.' योगीश्वरः—निष्पीड्य स्नानवस्त्रं तु आचम्य विधिना ततः । देवानामर्चनं कुर्याद्ब्रह्मादीनामनन्तरम् ॥ आह्निककारिकासु—गृहस्नानं यदा कुर्याद्वस्त्रमूर्ध्वं परित्यजेत् । अधोग्रेण च सम्पीड्य पराशरवचो यथा ॥ स्नानं कृत्वार्द्रवस्त्रं च ऊर्ध्वमुत्तारयेद्द्विजः । आर्द्रवस्त्रमधः क्षिप्त्वा पुनःस्नानेन शुद्ध्यति॥मनुः—काकस्पृष्टानि वस्त्राणि प्रोक्षितानि शुचीनि हि । प्रोक्षणाद्भूमिशुद्धिः स्याद्वाससामपि सर्वदा ॥ योगी—प्रोक्षणेनैव शुद्धिः स्याद्दुकूले चैव कम्बले । प्रक्षालनेन वस्त्रस्य सम्पर्के सूतके रजे ॥ नीली पट्टे जलं तक्रे गावश्चाण्डालमन्दिरे । पञ्चगव्येन भिक्षान्नं पवित्राणि दिने दिने । द्रव्यस्यान्तर्गता नीली न दूष्यति कदाचन । कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते ॥ धौम्यः—अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयते । वीर्यस्पृष्टं शवस्पृष्टं स्पृष्टं मूत्रपुरीषयोः । रजस्वलादिसंस्पृष्टमाविकं तु सदा शुचि ॥ याज्ञवल्क्यः—त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः । भस्मभिः कांस्य-

लोहानां शुद्धिः प्लावो द्रवस्य तु ॥ अन्यस्तु—घृतस्य नवनीतस्य आढकादिप्रमाणस्य श्वकाकादिदुःस्पर्शे प्रत्यक्षस्पर्शयुक्तं तद्धृतनवनीतादिकं त्यक्त्वान्यद्भाण्डे प्रक्षिप्याग्नौ प्रताप्य वस्त्रेण परिशोध्य गायत्र्याभिमन्त्रितजलाभ्युक्षणाच्छुध्यति । एवं तक्रतैलक्षीरदध्नां द्रोणप्रमाणानां काकाद्युपहतौ शुद्धिं कुर्यात् ॥ सर्वत्र वसुधा पूता यत्र लेपो न विद्यते । यत्र लेपो भवेत्तत्र पुनर्लेपेन शुध्यति । पञ्चगव्यं पिबेद्विप्रो बिभृयाच्छिरसा नृपः । वैश्यस्याभ्युक्षणं प्रोक्तं शूद्रस्य तु निरीक्षणम् ॥ अतीव तृषितो विप्रस्तोयं शूद्रस्य चेत्पिबेत् । उपवासेन चैकेन पञ्चगव्येन शुध्यति ॥

११८. 'सन्ध्योपासनम्.' कात्यायनपरिशिष्टसूत्रे—उत्तीर्य धौते वाससी परिधाय मृदोरू करौ प्रक्षल्याचम्य । त्रिरायम्यासून् पुष्पाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्ववाहुः सूर्यमुदीक्षन्नुद्वयमृदुत्यं चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्ति ॥ पारस्करगृह्यसूत्रे—वाक्प्राणश्चक्षुःश्रोत्रं यशोबलमिति त्र्यायुषाणि करोति ॥

११९. 'सन्ध्याफलम्.' अत्रिः—सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ याज्ञवल्क्यः—यावन्तोऽस्यां पृथिव्यां हि विकर्मस्थास्तु वै द्विजाः । तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥ निशायां वा दिवा वापि यदज्ञानकृतं भवेत् । त्रिकालसन्ध्याकरणात्तत्सर्वं हि प्रणश्यति ॥

१२०. 'सन्ध्याऽभावे दोषः.' मरीचिः—सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता । जीवमानो भवेच्छूद्रो मृतः श्वा चाऽभिजायते ॥ दक्षः—सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

१२१. 'सन्ध्याव्याख्या.' नागदेवः—अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥

१२२. 'सन्ध्याकालः.' नागदेवः—सूर्योदयात्पूर्वं द्वे घटिके सन्ध्याकालः ॥ अत्रिस्मृतौ—सन्ध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः । क्षत्रियस्य तदर्धं स्यात्तदर्धं स्याद्विशोऽप्युत ॥ धर्मसारे—उत्तमा तारकोपेता मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता ॥

१२३. 'त्रिकालसन्ध्यानामानि.' व्यासः—'गायत्री' नाम पूर्वाह्णे 'सावित्री' मध्यमे दिने । 'सरस्वती' च सायाह्ने एवं सन्ध्या त्रिधा स्मृता ॥

१२४. 'प्रातःसन्ध्यावर्णनम्.' बृहत्पाराशरः—पूर्वसन्ध्या तु गा-

यत्री ब्राह्मणी हंसवाहना । रक्तपद्मारुणा देवी रक्तपद्मासनस्थिता ॥ रक्ता-भरणभासाङ्गा रक्तमाल्याम्बरा तथा । अक्षमाला स्रुवाधारा चारुहस्ताऽमरार्चिता ॥ प्रागादित्योदयाद्विद्वान्मुहूर्ते वैधवे सति । उत्थायोपासयेत्सन्ध्यां यावत्स्यादर्कदर्शनम् ॥ विश्वमातः सुराभ्यर्च्ये पुण्ये गायत्रि वैधसि । आवाहयाम्युपास्त्यर्थमेह्येनोऽस्ति पुनीहि माम् ॥

१२५. 'माध्याह्नसन्ध्यावर्णनम्.' बृहत्पाराशरः—सन्ध्या माध्याह्निकी श्वेता सावित्री रुद्रदेवता । वृषेन्द्रवाहना देवी बालत्रिशिखधारिणी ॥ श्वेताम्बरधरा श्वेता नानाभरणभूषिता । श्वेतस्रगक्षमालापि कृतानुरक्तशङ्करा ॥ जलाधारा धरा धात्री धरेन्द्राङ्गभवाभवा । स्वभाविभातभूराद्या सुरौघनुतपद्धया ॥ मातर्भवानि विश्वेशि विश्वविश्वजनार्चिते । शुभे वरे वरेण्याहि आहूते हि पुनीहि माम् ॥

१२६. 'सायंसन्ध्यावर्णनम्.' बृहत्पाराशरः—सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती । स्वर्गगा कृष्णवस्त्रा तु शङ्खचक्रगदाधरा ॥ कृष्णस्रूभूषणैर्युक्ता सर्वज्ञानमया वरा । सर्ववाग्देवता सर्वा ब्राह्म्यादिवचसि स्थिता ॥ वीणाक्षमालिका चारुहस्ता सितवरानना । चतुर्दशजनाभ्यर्च्या कल्याणी शुभकृत् सदा । मातर्वाग्देवते देवि वरेण्ये च वरप्रदे । सर्वमरुद्गणस्तुत्ये आहूते हि पुनीहि माम् ॥

१२७. 'सन्ध्यावर्णाः.' व्यासः—गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका । सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥ तत्रैव—गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा उपास्या वर्णभेदतः ॥

१२८. 'सन्ध्यागोत्राणि.' ग्रन्थान्तरे—गायत्री तु साङ्ख्यायनसगोत्रम् ॥ सावित्री तु कात्यायनगोत्रम् ॥ तथा सरस्वती तु बाहुल्यगोत्रम् ॥

१२९. 'सन्ध्योपयोगिजलपात्राणि.' प्रयोगपारिजाते—धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता । नद्यां तीर्थे ह्रदे वापि भाजने मृन्मयेपि वा ॥ औदुम्बरे च सौवर्णे राजते दारुसम्भवे । कृत्वा तु वामहस्ते वा सन्ध्योपास्तिं समाचरेत् ॥ मरीचिः—गोकर्णाकृतिवत्पात्रं ताम्रं रौप्यं च हाटकम् । जलं तत्र विनिक्षिप्य सन्ध्योपासनमाचरेत् ॥ आह्निककारिकासु—कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः । आचान्तः शतकृत्वोऽपि न कदाचन शुद्ध्यति ॥

१३०. 'सन्ध्यादिजपस्थलम्.' वाचस्पतौ ईश्वरः—गृहे जपः

समः प्रोक्तो गोष्ठे शतगुणः स्मृतः । आरामे च तथाऽरण्ये सहस्रगुण उच्यते । अयुतः पर्वते पुण्ये नद्यां लक्षगुणस्तु सः । कोटिर्देवालये प्राहुरनन्तः शिवसन्निधौ ॥ याज्ञवल्क्यः—शतेन गायत्र्या स्नायात् शतमन्तर्जले जपेत् । आपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ॥ शारदायाम्—पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् । तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं सरः ॥ उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः । देवाद्यायतनं कूलं समुद्रस्य निजं गृहम् ॥ शातातपः—अनृतं मद्यगन्धं च दिवामैथुनमेव च । पुनाति वृषलस्थानं बहिःसन्ध्या ह्युपासिता ॥

१३१. 'कालातिक्रमणे सन्ध्योपासनम्.' मदनपारिजाते—कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत् ॥

१३२. 'उक्तासनानि.' व्यासः—कौशेयं कम्बलं चैव अजिनं पट्टमेव च । दारुजं तालपत्रं वा आसनं परिकल्पयेत् ॥

१३३. 'आसनगुणाः'—कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । वंशाजिने व्याधिनाशः कम्बले दुःखमोचनम् ॥ अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि । शान्तिके कम्बलः प्रोक्तः सर्वेष्टं चित्रकम्बलम् । वंशासने तु दारिद्र्यं पाषाणे व्याधिसम्भवः । धरण्यां दुःखसम्भूतिर्दौर्भाग्यं छिद्रिदारुजे । तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ॥

१३४. 'आसनपरिमाणम्.' कालीपुराणे—चतुर्विंशत्यङ्गुलैस्तु दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् ॥ पञ्चाङ्गुलं वा कुर्याच्चु नोच्छ्रितं चात्र कारयेत् । वास्त्रं द्विहस्तान्नो दीर्घं सार्द्धहस्तान्न विस्तृतम् ॥ त्र्यङ्गुलं तु तथोच्छ्रायं पूजाकर्मणि संश्रयेत् । सर्वेषां तैजसानां च आसनं श्रेष्ठमुच्यते ॥

१३५. 'वर्ज्यासनम्.' देवीभागवते—आयसं वर्जयित्वा तु कांस्यसीसकमेव च ॥

१३६. 'पादुकाधारणनिषेधः.' अङ्गिराः—अग्न्यागारे गवां गोष्ठे देवब्राह्मणसन्निधौ । आहारे जपकाले च पादुकानां विसर्जनम् ॥

१३७. 'प्रौढपादासनम्.' आचारमयूखे—दानमाचमनं होमं भोजनं देवतार्चनम् । प्रौढपादेन कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ आह्निककारिकासु—आसनारूढपादस्तु जानुनोर्वाथ जङ्घयोः । कृतावसक्थिको यश्च प्रौढपादः स उच्यते ॥

---

१. एतदादिषडासनानि नौपाधिकानि किंतु शरीरावयवसंकोचविकसनभेदेन शरीरसाध्यान्येव ज्ञेयानि ।

१३८. 'स्वस्तिकासनम्.' कालीपुराणे—सव्यमाकुञ्चितचरणं दक्षिणजङ्घोर्वन्तरे दक्षिणं च सव्यजङ्घोर्वन्तरे निक्षिपेदिति ॥

१३९. 'पद्मासनम्.'—पद्मासनमिदं प्रोक्तं योगिनां हृदयङ्गमम् । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥ वाचस्पतौ—ऊरुमूले वामपादं पुनस्तु दक्षिणं पदम् । वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम् ॥ देवीभागवते—पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा । वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ॥ ऊर्वोरुपरि विन्यस्य सम्यक् पादतले शुभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः ॥

१४०. 'स्वस्तिकासनम्.' देवीभागवते—ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥

१४१. 'भद्रासनम्.' देवीभागवते—सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम् ॥ वृषणाधः पादपार्ष्णिः पाणिभ्यां परिबन्धयेत् । भद्रासनमिति प्रोक्तं योगिभिः परिपूजितम् ॥

१४२. 'वज्रासनम्.' देवीभागवते—ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली । करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् ॥

१४३. 'वीरासनम्.' देवीभागवते—एकं पादमधः कृत्वा विन्यस्यैकं तथोत्तरे । ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥

१४४. 'सन्ध्योपासने दिग्विचारः.' लघुव्याससंहितायाम्—प्राङ्मुखः प्रयतो विप्रः सन्ध्योपासनमाचरेत् ॥ आसीनः प्राङ्मुखो नित्यं जपं कुर्याद्यथाविधि ॥ परिभाषाकर्मप्रदीपे—यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ यत्र दिङ्नियमो न स्याज्जपहोमादि कर्मसु । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥ गौतमः—रात्रावुदङ्मुखः कुर्याद्दैवं कार्यं सदैव हि । शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥ तन्त्रान्तरे—यत्रैव भानुः सततं ह्युदेति प्राचीति तां वेदविदो वदन्ति । ततोऽपरां पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति यां तु । तत्परिभाषायामुक्तत्वात् । अन्यत्र तु सूर्योदयोपलक्षितैव प्राची ग्राह्या । बृहत्पाराशरः—ईशान्यभिमुखो भूत्वा द्विजः पूर्वमुखोऽपि वा । सन्ध्यामुपासयेन्नित्यं यथावत्तन्निबोधत ।

१४५. 'सन्ध्यायां मात्राः.' देवीभागवते—इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया ॥ धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया ॥ सुषुम्ना-

१. एतदासनं सूर्यार्घ्यप्रदाने योजनीयम्. २. इयं पूज्यपूजकान्तर्वर्तिनी प्राच्यागमोक्तपूजायामेव ग्राह्या ॥

मध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः ॥ नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः ॥ प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ॥

**१४६. 'भस्मधारणम्.'** पारस्करगृह्यसूत्रे—भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम् ॥ प्रातः ससलिलं भस्म मध्याह्ने गन्धमिश्रितम् । सायाह्ने निर्जलं भस्म एवं भस्म विलेपयेत् ॥

**१४७. 'ग्राह्यं भस्म.'** ब्राह्मे—गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना विभर्ति यः । विभर्ति सोऽर्कस्य तेजस्तमोनाशाय केवलम् ॥ **काशीखण्डे**—आग्नेय्यमुच्यते भस्म दग्धगोमयसम्भवम् । तदेव द्रव्यमित्युक्तं त्रिपुण्ड्रस्य महामुने ॥ **सङ्ग्रहे**—अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा । औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥ समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥ अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥ **प्रयोगपारिजाते**—मृद्भस्म चन्दनं प्रोक्तं तोयं चैव चतुर्थकम् । स्नात्वा पुण्ड्रं मृदा कुर्यात्प्रक्षाल्यैव तु भस्मना ॥ देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥

**१४८. 'भस्मधारणफलम्.'** कात्यायनः—श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥

**१४९. 'भस्मधारणप्रकाराः.'** कात्यायनः—ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् । उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥ **प्रयोगपारिजाते**—धार्यं भस्मत्रिपुण्ड्रं तु गृहिणा जलसंयुतम् । सर्वकालं भवेत्स्त्रीणां यतीनां जलवर्जितम् ॥ वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा । मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् ॥ मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य च । त्रिपुण्ड्रं धारयेद्विद्वान् सर्वकिल्बिषनाशनम् ॥ **भविष्यपुराणे**—सितेन भस्मना कुर्यात्रिसन्ध्यं च त्रिपुण्ड्रकम् । सर्वपापविनिर्मुक्तः शिवेन सह मोदते ॥ सत्यं शौचं जपो होमस्तीर्थदेवादिपूजनम् । तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ **स्मृतिरत्नावल्याम्**—ललाटे हृदये नाभौ गलेंऽसे बाहुसन्धिषु । पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत् ॥ मध्यमाऽनामिकाङ्गुष्ठैरनुलोमविलोमतः । अतिस्वल्पमनायुष्यमतिदीर्घं तपःक्षयम् ॥ नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः । षडङ्गुलप्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकम् ॥ नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं मतम् । शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् । **काशीखण्डे**—भ्रुवोर्मध्यं समारभ्य यावदन्तो भवेद् भ्रुवोः । मध्यमाऽनामिकाङ्गुल्योर्मध्ये तु प्रतिलोमतः । अङ्गुष्ठेन कृता रेखा त्रिपुण्ड्रः सोऽभिधीयते ॥

